## २०

# श्रीशंकरस्तोत्रम्

**ॐ** कारवाच्य सकलार्चितपादपद्म
**न** ष्टस्वकष्ट तव नौमि सुभद्रसद्म।।
**म** त्तारिहंतृचरणं शरणं सदाप्ता-
**स्ते** भूय ईश जननीजठरं न चाप्ताः।।१।।

**अ** हं त्वदर्चाविधिं न जाने
**स्तु** त च गिरिजासूनु जाने।।
**भ** क्तिस्त्वयीशे न दृढा ममास्ति
**ग** रिष्ठसत्संग उतापि नास्ति।।२।।

**वन्** दे पदे ते भुवनाधिराज
**वि** द्याधिराजाप्यमृताधिराज।।
**श्वे** तद्युते भक्तपते नमस्ते
**श्व** श्राइझटित्युद्धर मां भवाख्यात्।।३।।

**रा** जासुराणां त्वमभीष्टदाता
**य** द्यप्यहो सिद्धनिधिप्रदाता।।
**म** हाश्मशाने नृकरोटिमालाम्
**हा** र्दैन धृत्वा प्रकरोषि लीलाम्।।४।।

**दे** वाङ्गलेपनमुतापि चिताविभूतिर्
**वा** हो वृषः सहचरास्तव भूतवाराः
**य** स्यांकुशं त्वगशिवापि शिवापि तेऽस्ति
**त्रि** ष्वीशितः पितृवने सवनेऽपि वासः।।५।।

**यं** ताखिलस्येदृश ईश तेऽपि
**ब** लारिमुख्या अमरा हि तेऽपि
**का** शीश जानन्ति परं न तत्त्वम्
**य** स्येश मां चानुगृहाण स त्वम्।।६।।

**त्रि** विक्रमोऽप्यब्जभञ्जभवश्च लिङ्गम्
**पु** रा परिच्छेत्तुमनीश्वरौ ते।।
**रु** द्रेदृशस्ते गुणवर्णनाय
**षा** ण्मातुरे भास्य गुरो प्रभुः कः।।७।।

**य** स्त ईश परिकीर्तयेद्गुणान्
**त्रि** ष्वपीह सवनेषु भक्तिमान्।।
**पु** ण्यवानिह भनेत्तथा नरो
**रां** कवांबरधरोऽपि नापरः।।८।।

**त** पो जपो यज्ञमुखा क्रिया या
**का** चित्प्रमादाद्विकला यदि स्यात्।।
**य** न्नामसंकीर्तनतः सुपूर्णा
**त्रि** दृग्भवेत्त्वां तमजं गृणामि।।९।।

**का** लो मृकंडात्मजमर्कचंद्रमोऽ-
**ग्नि** नेत्रं नेतुं समुपागतस्तदा।।
**का** लान्तकागच्छशिवेत्यहो तदाऽऽ-
**ला** पश्रुतेस्त्वं तमु मुक्तवानसि।।१०।।

**य** स्मै सकृन्नमश्चक्रे बाणरावण आसुरः।।
**का** मपूर्तिस्तयोरासीत्संपद्देवश्रियोऽधिका।।११।।

**ला** भोऽपरो नश्वर एव कामोऽ-
**ग्नि** वद्घृतेनेश न कामभोगैः।।
**रु** द्रोप्रशाम्यत्यत एव देहि
**द्रा** क्शांतिदां त्वय्यचलां सुभक्तिम्।।१२।।

**य** त्लं विना दुःखमुपैति यद्वत्
**नी** रागमप्येति सुखं च तद्वत्।।
**ल** ब्धुं यते तन्न वृणोमि चार्थम्
**कं** चित्त्वयीशार्पय भक्तिमेकाम्।।१३।।

**ठा** ये विदा तानपि भक्तियोगो
**य** थानुगृह्णाति तथा परो नो।।
**स** र्वेऽपि यस्मादिह पावनाः स्यु-
**र्वे** दाः प्रमाणं त्विह संशयो नो।।१४।।

**श्व** पाकमुख्या अपि यस्य भक्त्या
**रा** जन्त ईशान तवैव लोके।।
**य** ज्ञेश चण्डालसुतापि याता
**स** तीं गतिं विश्रुतमेतदस्ति।।१५।।

**दा** रात्मजागारधनादि सर्वं
**शि** वेह संन्यस्य सदा भजन्ति।।
**वा** मं परं त्वां मुहुरत्र ते किम्
**य** मीश मृत्यूद्भवदुःखभाजः।।१६।।

**श्री** कंठ सूर्येन्दुपयोनभोऽग्नि-
**म** रुद्धरात्मान इमास्तनूस्ते।।
**हा** लाहलादानिशमानतोऽस्मि
**दे** वाधिदेवेश्वर मे प्रसीद।।१७।।

**वा** ताशोपवीतो
**य** उ पंचास्यस्त्रिलोचनो नग्नः।।
**न** न्दिगतो दशहस्तो
**मः** केस्य स पातु मुन्मग्नः।।१८।।

इति श्री प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीशंकरस्तोत्रं संपूर्णम्।